पुच्छं संगृह्य धेनोश्च अग्रे कृत्वा तु वै द्विजम्। धेनुके त्वं प्रतीक्षस्व यमद्वारे महाभये ॥३४॥
उत्तारणार्थं देवेशि वैतरण्यै नमो नमः। अनुव्रजेद्द्विजं यातं सर्वं तस्य गृहं नयेत् ॥३५॥
एवं कृते वैनतेय सा सरित्सुखदा भवेत्। सर्वान्कामानाप्नुवन्ति ददते ये च मानवाः ॥३६॥
सुकृतस्य प्रभावेण सुखञ्चेह परत्र च। स्वस्थे सहस्रगुणितं आतुरे शतसम्मितम् ॥३७॥
मृतस्यैव तु यद्दानं परोक्षे तत्समं स्मृतम्। स्वहस्तेन ततो देयं मृते कः कस्य दास्यति ॥३८॥
दानधर्मविहीनानां कृपणं जीवितं क्षितौ। अस्थिरेण शरीरेण स्थिरं कर्म समाचरेत् ॥
अवश्यमेव यास्यन्ति प्राणाः प्राघूर्णिका इव ॥ ३९ ॥

इतीदमुक्तं तव पक्षिराज विडम्बनं जन्तुगणस्य सर्वम्।
प्रेतस्य मोक्षाय तदौर्ध्वदैहिकं हिताय लोकस्य शुभार्थबोधन ॥ ४० ॥

## सूत उवाच

एवं विप्राः समादिष्टं विष्णुना प्रभविष्णुना। गरुड़ः प्रेतचरितं श्रुत्वा सन्तुष्टमानसः ॥४१॥
व्रततीर्थादिकं पुण्यं पुनः पप्रच्छ केशवम्। ध्यात्वा मनसि सर्वेशं सर्वकारणकारणम् ॥४२॥
ऋषयः सर्वमेतत्तु जन्तूनां प्रभवादिकम्। मया प्रोक्तं हि वै मुक्त्यै प्रेतस्य चौर्ध्वदैहिकम् ॥
निदानं वच्मि लोकानां हिताय परमौषधम् ॥ ४३ ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः। येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥४४॥
विष्णुर्माता पिता विष्णुर्विष्णुः स्वजनबान्धवः। येषामेवं स्थिरा बुद्धिर्न तेषां दुर्गतिर्भवेत् ४५॥
मङ्गलं भगवान्विष्णुर्मङ्गलं गरुड़ध्वजः। मङ्गलं पुण्डरीकाक्षो मङ्गलायतनं हरिः ॥४६॥
हरिर्भागीरथी विप्रा विप्रा भागीरथी हरिः। भागीरथी हरिर्विप्राः सारमेतज्जगत्त्रये ॥४७॥
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

## श्रीभगवानुवाच

इति सूतमुखोद्गीर्णां सर्वशास्त्रार्थमण्डनीम्। वैष्णवीं वाक्सुधां पीत्वा ऋषयस्तुष्टिमाप्नुयुः ॥
प्रशशंसुस्तथान्योन्यं सूतं सर्वार्थदर्शिनम्। प्रहर्षमतुलञ्चापुः शौनकाद्या महर्षयः ॥५०॥
सर्वेषां मङ्गलं भूयात्सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥

इति गरुड़पुराणे प्रेतकल्पे प्रजानां हितमभिहितमादौ सूतपुत्रेण पुण्यम्।
क्रतुकरणगतानां नैमिषे सन्मुनीनां श्रवणगतमकुर्वन् किं विजानाति मर्त्यः ॥५२॥

इति श्रीगारुड़े महापुराणे प्रेतकल्पे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

समाप्तमिदमुत्तरखण्डम्।

---

समाप्तोऽयं ग्रन्थः

